काचिद् गृहवृत्त्याद्याश्रिता गुर्विणी, पदातिजायया सह एकस्यां रजन्यां प्रसूता। तस्या नकुलो जातः, इतरस्यास्तु पुत्रः, ततोऽस्य समीपे नकुलः सदैव तिष्ठति स्म। अन्यदा च पदातिजायया द्वारे कण्डयन्त्या मध्ये मञ्चिकायां स्थापितो बालकः सर्पेण दष्टो मृतश्च। ततो मञ्चिकाया उपरि नकुलेन दृष्टो विषधरः खण्डशः कृत्वा मारितश्च, ततो द्वारे पदातिभार्यायाः समीपे गत्वा शोणितोपलिप्तवक्त्रचरणोऽस्याश्चाटूनि कर्तुमारब्धः, दृष्टश्च तया। ततो नूनं मदीयपुत्रं मारयित्वा भक्षितोऽनेनेति विचिन्त्य कोपावेशान्मुशलेन हत्वा मारितो नकुलः। गता च पुत्रसमीपे। दृष्टश्च पुत्रेण सह विनष्टः सर्पः, ज्ञातं च यथा सर्पो निहतस्ततो हन्तैतन्निरपराधोऽप्युपकार्यपि मया निष्कृपया हतो वराको नकुलः, इति विचिन्त्य द्विगुणतरं शोकमापन्ना। पूर्वमपराधिनं विज्ञाय नकुलं घ्नन्त्यास्तस्या भावाननुयोगः, इतिः यथावस्थितावगमे त्वनुयोगः। प्रस्तुतयोजना त्वनन्तरोक्तवदिति।

अथ कमलामेलोदाहरणम्–

तत्र द्वारवत्यां नगर्यां बलदेवपुत्रो निषधः, तस्यापि सूनुः सागरचन्द्रः, स च रूपेणातीवोत्कृष्टः, शाम्बादीनां च कुमाराणां सर्वेषामप्यतिप्रियः, तस्यामेव च द्वारवत्यां नगर्यामन्यस्य राज्ञो दुहिता कमलामेला नाम समस्ति स्म। सा चोग्रसेनतनयस्य नभःसेनकुमारस्य दत्ता वृता च तिष्ठति स्म। अन्यदा च तत्र नारदः सागरचन्द्रस्य समीपे गतः। तेनाप्युत्थाय उपवेश्य प्रणम्य च पृष्टः– दृष्टं भगवन्! आश्चर्यं किमपि क्वापि? नारदेनोक्तम्–दृष्टं कमलामेलाभिधानराजपुत्रिकाया न खलु ममैव किन्तु भुवनत्रयस्याप्याश्चर्यकारि रूपम्। सागरचन्द्रेणोक्तम्–किं दत्ता कस्यचित्सा? नारदेनोक्तम्–दत्ता परं नाद्यापि परिणीता। कथं पुनर्मम सा संपत्स्यते? इति सागरचन्द्रेणोक्ते, न जानाम्येतदहमित्यभिधाय गतो नारदः। सागरचन्द्रस्तु तद्दिनादारभ्य न शयानो नाप्यासीनः क्वापि रतिं लभते, तामेव कन्यकां फलकादिष्वालिखन्, तन्नाममात्रजापं चानवरतं कुर्वन्नास्ते स्म। नारदोऽपि कमलामेलाऽन्तिकं गतः। तयाऽपि तथैवाश्चर्यं किमपि दृष्टम्?, इति पृष्टः कलहदर्शनप्रियतया स प्राह–दृष्टमाश्चर्यद्वयं मया–सागरचन्द्रे सुरूपत्वं, नभःसेने तु कुरूपत्वम्। ततो झगित्येव सा विरक्ता नभःसेने, अनुरक्ता च सागरचन्द्रे। तत्प्राप्तिचिन्ताऽऽतुरा च समाश्वासिता नारदेन सा–वत्से! स्थिरीभव संपत्स्यते अचिरादेव तवाभिमतमित्युक्त्वा गतः सागरचन्द्रसमीपे। इच्छति त्वां सेत्यभिधाय गतः। ततो विरहावस्थाव्यथितं प्रलपन्तं च सागरचन्द्रं, आर्ताः सर्वेऽपि मात्रादिस्वजनवर्गाः खिद्यन्ते यादवाः। तदवसरे समायातः कथमपि सागरचन्द्रसमीपे शाम्बकुमारः, दृष्टश्च तेनासौ तदवस्थः, ततः पृष्ठतस्तस्य स्थित्वा हस्तद्वयेनाच्छादिते नेत्रे शाम्बेन। सागरचन्द्रेणोक्तम्–किं कमलामेला? शाम्बेनोक्तम्–नाहं कमलामेला, किन्तु कमलामेलोऽहम्। ततः सागरचन्द्रेण शाम्बोऽयमिति ज्ञात्वा प्रोक्तम्–सत्यमेव कमलसमदीर्घलोचनां कमलामेलां मेलयिष्यसि, कोऽत्रार्थेऽन्यः समर्थ इति। ततोऽन्यैर्यदुकुमारैः पायितमद्यः परवशीभूतः शाम्बो ग्राहितस्तद्दापनप्रतिज्ञाम्। उत्तीर्णे च मदभावे विचिन्तितं शाम्बेन–अहो! अलं मयाऽभ्युपगतम्, अशक्यं ह्येतद्वस्तु, कथमियं प्रतिज्ञा निर्वाहयिष्यते, ततः प्रद्युम्नपार्श्वात्प्रज्ञप्तिविद्या याचिता शाम्बेन। विवाहदिवसे च बहुभिर्यादवकुमारैः परिवृतेन तेन सुरङ्गां पातयित्वा पितृगृहादाकृष्य नीता बहिरुद्याने कमलामेला। नारदं च साक्षिणं कृत्वा कारितस्तत्पाणिग्रहणसंबन्धः सागरचन्द्रस्य। ततः सर्वेऽपि कृतविद्याधररूपाः क्रीडन्तस्तिष्ठन्ति स्म। उद्याने पितृश्वसुरपक्षैश्चान्वेषयद्भिर्दृष्टा कृतविद्याधररूपा सपरिवारा विद्याधारिणी च क्रीडन्ती कमलामेला। विद्याधरैरपहृत्य परिणीता कमलामेलेति कथितं तैर्वासुदेवस्येति। निर्गतश्च विद्याधरोपरि कुपितः सबलवाहनोऽसौ, लग्नं च महदायोधनं तावद्यावत्पश्चाच्छाम्बः परिहृतविद्याधररूपः पतितो जनकस्याङ्घ्रियुगमे। ततश्चोपसंहृतः संग्रामः, दत्ता च कृष्णेन कमलामेला सागरचन्द्रस्यैव। गताश्च सर्वे स्वस्वस्थानम्। तत्र सागरचन्द्रस्य शाम्बं कमलामेलां मन्यमानस्य भावाननुयोगः, यथावस्थितावगमे तु भावानुयोगः। विपरीतादिप्ररूपणयोजना तु प्रस्तुता पूर्ववदिति।

शाम्बसाहसोदाहरणमिति वचनान्तरं शाम्बस्योदाहरणम्–वासुदेवाच्चेपजाश्च सदैव शृणोति जाम्बवती–समस्तानामप्यालीनां मन्दिरं त्वत्पुत्रः शाम्ब इति। ततो जाम्बवत्या विष्णुरभिहितः–मया पुत्रस्यैकाऽप्यालिर्न दृष्टा। विष्णुनोक्तम्–आगच्छ येनाद्य दर्शयामि। ततो जाम्बवती उत्कृष्टाऽऽभीरीरूपं कारिता, स्वयं पुनराभीररूपं कृत्वा दण्डहस्तः स्वयं पृष्ठे व्यवस्थितः। अग्रतस्तु मस्तकन्यस्तदधिहाण्डिका जाम्बवती कृता, प्रविष्टोऽथ दधिविक्रयार्थं नगरीमध्ये। दृष्टा च शाम्बेन साऽऽभीरी। तदुत्कृष्टरूपा आभीरीति विज्ञाय प्रोक्ता शाम्बेनैषा–आगच्छ मद्गृहे सर्वस्यापि त्वदीयदध्नो यावन्मात्रं मूल्यं याचसे तदहं दास्यामीत्युक्त्वा स्वयं पृष्ठतस्त्वाभीरी पश्चात्त्वाभीरः स्वैरं शून्यदेवकुलिकायामेकस्यां गत्वा प्रोक्ता शाम्बेनाभीरी–प्रविश एतन्मध्ये, मुञ्च दधि। तया च विरूपमिदमिति विज्ञायोक्तम्–नाहमत्र प्रविशामि, द्वारस्थिताया एव गृहाण दधि, प्रयच्छ मूल्यम्। बलादपि प्रवेशयिष्यामीत्यभिधाय गृहीता शाम्बेन सा बाहौ, ततो धावित्वा द्वितीयबाहौ लग्न आभीरः, सोऽपि चाकर्षणविकर्षणं कुर्वन्तोऽभवन् भावक्रम। ततः कृतं स्वस्वरूपमात्मनो जाम्बवत्याश्च विष्णुना। तच्च दृष्ट्वा लज्जितोऽसौ शाम्बः, नागच्छति चावसरेऽपि लज्जया राजकुले। ततोऽन्यदा विष्णुनियुक्तपुरुषैः कष्टेनानीयमानः कीलिकया एकाकीलिकं घट्टयन्नागच्छत्यसौ। प्रणामे च कृते पृष्टो वासुदेवेन शाम्बः–किमेतत् कीलिकया घट्ट्यते? तेनोक्तम्–कीलिकाऽयम्। किं ... पुनरभी?, यः पर्युषितानां तज्जल्पान्वादिष्यति तन्मुखे आहनिष्यामीति। तदत्र शाम्बस्य मातरमप्याभीरीं मन्यमानस्य भावाननुयोगः, पश्चाद्यथावदवगमे तु भावानुयोगः। प्रस्तुतयोजना तु पूर्ववदिति।

अथ श्रेणिककोपोदाहरणम्–

राजगृहे नगरे समवसृतस्य भगवतः श्रीमन्महावीरस्य श्रेणिकनराधिपो राज्ञ्या चेल्लणया सह माघमासे सकलप्रवर्तिनि महाशीते पतति वन्दनार्थं गतः। ततो निवर्तमानस्य च तस्य राज्ञ्या चेल्लणया मार्गमध्ये तपःकर्शितशरीरः प्रभूतेऽप्यनावरणो मेरुशिखरमिव निष्प्रकम्पः प्रतिमाप्रतिपन्नो वनकायोत्सर्गस्थितः सन्ध्यायां दृष्टः कोऽपि तपस्वी। ततोऽसौ तद्गुणानेव मनसि ध्यायन्ती गृहं गता, सुप्ता च रजन्यामनेकशीतत्राणप्रावरणप्रावृता पल्यङ्के, निर्गतश्च प्रावरणेभ्यो बहिस्तस्या एकः करः, शीताभिभूतश्चायमतीव स्तब्धीभूतः, तदनुसारेण च समस्तमपि शरीरं तथा व्याप्तं शीतेन यथा निद्रान्तरेऽपि ज्ञापितं तया। ततः क्षिप्तो हस्तः प्रावरणमध्ये, स्थितश्च हृदये स तथा कायोत्सर्गस्थायी महामुनिः, तद्गुणानुस्मरणवशाद् तया विस्मितया च प्रोक्तं तया–स तपस्वी किं करिष्यतीति, एतत्केनाप्यावरणबहिर्निर्गतेन हस्तेनाहमेतावतीं शीतबाधां प्राप्ता, निरावरणे कष्टतपःकर्षित एवंविधमहाशीतबाधितः स तपस्वी किं

नकारिणो लिङ्गकरणं द्रव्यलिङ्गस्य भावलिङ्गस्य वा तत्र क्षेत्रे प्रदानम्, कारणं तु भक्तप्रत्याख्यानप्रतिपत्तिलक्षणे अन्यत्र वा तत्र वा अनुज्ञातमेव । एषा पुरातनी गाथा ॥

अत एनां विवरीषुराह—

हत्थातालो जणिओ, तस्स उ दो आइमे पदे मोत्तुं ।
अत्थायाणे लिंगं न दिंति तत्थेव विसयम्मि ॥

हस्तातालसूत्रक्रमप्रामाण्यात् तृतीयम्, अर्थात् तस्य द्वे आदिमे हस्तातालहस्तालम्बलक्षणे पदे मुक्त्वा यदर्थादानाख्य पदं तत्र वर्तमानस्य तस्मिन्नेव विषये देशे लिङ्गं न ददति । स च अर्थादानकारी गृही लिङ्गी वा । तत्र—

गिहिलिंगस्स उ दोण्ह वि, आसन्ने न दिंति जावलिंगं तु ।
दिज्जंति दो वि लिंगा, ओवत्तिय य उत्तमट्ठस्स ॥

यो गृहिलिङ्गी प्रव्रज्यार्थमभ्युत्तिष्ठति तस्य द्वे अपि-द्रव्यभावलिङ्गे तस्मिन्देशे न दीयेते । यः पुनरवसन्नस्तस्य द्रव्यलिङ्गं विद्यत एव, परं भावलिङ्गं तत्र तस्मिन्नेव न ददति । यदा पुनरसावुत्तमार्थस्य प्रतिपत्त्यर्थमुपतिष्ठते तदा तस्मिन्नपि देशे द्वयोरपि गृहस्थावसन्नयोर्द्वे अपि लिङ्गे दीयेते ।

अथैवं करणम्—

ओमासिवमाईहि व, मण्णिस्सति तेण तस्स तत्थेव ।
न य असहाओ मुच्चइ, पुट्ठो य भणिज्ज वीसरियं ॥

अवमाशिवराजद्विष्टादिषु वा समुपस्थितेषु गच्छस्य प्रतिसर्पिष्यति उपग्रहं करिष्यति, तेन कारणेन तत्रैव क्षेत्रे तस्य लिङ्गं प्रयच्छन्ति । तत्र चैव यतना-[न य असहाओ इत्यादि] स तत्रार्पितमहाव्रतः सन्नसहाय एकाकी न मुच्यते, लोकेन च निमित्तं पृष्टो भणति-विस्मृतं मम सांप्रतं तन्निमित्तमिति ।

अथ साधर्मिकादिस्तैन्येषु प्रायश्चित्तमुपदर्शयति—

साहम्मियअन्नधम्मिय-तेणेसु उ तत्थ होति (इ)मा भयणा ।
चउलहुगा चउ गुरुगा, अणवट्ठप्पो य आएसा ॥

साधर्मिकस्तैन्यान्यधार्मिकस्तैन्ययोस्तावदियं भजना प्रायश्चित्तरचना भवति-आहारं स्तेनयतश्चतुर्लघु, सचित्तं स्तेनयतश्चतुर्गुरवः, आदेशेन वा अनवस्थाप्यम् ।

अहवा अणुवज्झाओ, एएसु पएसु पावती तिविहं ।
तेसुं चेव पएसुं, गणिआयरियाण णवमं तु ॥

अथवा अनुपाध्यायो य उपाध्यायो न भवति किं तु सामान्यभिक्षुः स एतेषु आहारोपधिसचित्तरूपेषु यथाक्रमं त्रिविधं लघुमासं चतुर्लघु चतुर्गुरु वक्ष्यमाणं प्रायश्चित्तं प्राप्नोति । तेष्वेव चाहारादिषु पदेषु गणिन उपाध्यायस्याचार्यस्य च नवममनवस्थाप्यं भवति । अत्र परः प्राह-ननु मूले सामान्येनानवस्थाप्य एव भणितो न पुनर्लघुमासादिकं त्रिविधं प्रायश्चित्तं, तत्कथमिदमधुनाऽभिधीयते ? । उच्यते-आर्हतानामेकान्तवादः क्वापि न भवति । तथाहि—

तुल्लम्मि वि अवराहे, तुल्लमतुल्लं व दिज्जए दोएहं ।
पारंचिके पि नवमं, गणिस्स गुरुणो उ तं चेव ॥

तुल्यः सदृशोऽपराधो द्वाभ्यामपि आचार्योपाध्यायाभ्यां सेवितः, तत्र द्वयोरपि तुल्यमतुल्यं वा प्रायश्चित्तं दीयते, तत्र तुल्यदानं प्रतीतमेव । अतुल्यदानं पुनरिदम्-पाराञ्चिके पाराञ्चिकापत्तियोग्येऽप्यपराधपदे सेविते गणिन उपाध्यायस्य नवममनवस्थाप्यमेव दीयते, न पाराञ्चिकम्, गुरोराचार्यस्य पुनस्तदेव पाराञ्चिकं दीयते, ततो यद्यपि सूत्रे सामान्येनानवस्थाप्यमुक्तं तथापि तत् पुरुषविशेषापेक्षं प्रतिपत्तव्यम्, यद्वा-अभीक्ष्णसेवानिष्पन्नम् । तथा चाह-

अहवा अभिक्खसेवी, अणुवरयं पावई गणी नवमं ।
पावंति मूलमेव उ, अभिक्खपडिसेविणो सेसा ॥

अथवा साधर्मिकस्तैन्यादिरभीक्ष्णसेवी पुनः २ प्रतिसेवां यः करोति स तत· स्थानादनुपरमन् अनिवर्तमानो गणी उपाध्यायो नवमं प्राप्नोति । शेषास्तु ये उपाध्यायत्वमाचार्यत्वं वा न प्राप्तास्ते अभीक्ष्णप्रतिसेविनोऽपि मूलमेव प्राप्नुवन्ति, नानवस्थाप्यम् ।

अत्थादाणो ततिओ, अणवट्ठो खेत्तओ समक्खाओ ।
गच्छे चेव वसंतो, निज्जुहिज्जंति सेसाओ ॥

अष्टाङ्गनिमित्तप्रयोगेणार्थं द्रव्यमादत्त इति अर्थादानाख्यो यस्तृतीयोऽनवस्थाप्यः, स क्षेत्रतः समाख्यातः, तत्र क्षेत्रे नोपस्थाप्यत इत्यर्थः । शेषास्तु हस्तातालकारिप्रभृतयो गच्छ एव वसन्तो निर्यूह्यन्ते आलोचनादिभिः पदैर्बहिः क्रियन्त इत्यर्थः । बृ० ४ उ० ।

उक्कोसं बहुसो वा, पउट्ठचित्तो व तेणियं कुणइ ।
पहरइ जो य सपक्खे, निरवेक्खो घोरपरिणामो ॥
अभिसेओ सव्वेसु वि, बहुसो पारंचियाऽवराहेसु ।
अणवट्ठप्पावत्तिसु, पसज्जमाणो अणेगासु ॥

उत्कृष्टं वस्तुविषयं बहुशो वा पौनःपुन्येन प्रदुष्टचित्तो वा संक्लिष्टमनाः क्रोधलोभादिकलुषितमनसो यत् स्तैन्यं साधर्मिकस्तैन्यमन्यधार्मिकस्तैन्यं वा करोति । जी० । एवंविधार्थोपादानकारी आचार्यः स्वस्य महाव्रतान्यारोपयितुमभ्यर्थ्यमानो तद्दोषकरणनिवृत्तोऽपि तत्र क्षेत्रे न महाव्रतेषु स्थाप्यते, तथा हस्तालम्ब इव हस्तालम्बकं ददानः, अशिवे पुरक्षोभादौ तत्प्रशमनार्थमभिचारमन्त्रादीन्प्रयुञ्जान इत्यर्थः । तथा हस्तेन ताडनं हस्ततालस्तं ददानः यष्टिमुष्टिलगुडादिभिरात्मनः परस्य च मरणभयनिरपेक्षः स्वपक्षे श्रमण्यां परपक्षे च, घोरपरिणामो निर्दयो यः प्रहरति । एते त्रयोऽप्यनवस्थाप्याः क्रियन्ते । यदि वाऽऽचार्यादीन् कोऽपि हिनस्ति ततस्तन्मारणेनापि तान् रक्षति । यदाह-"आयरियस्स विणासे, गच्छे अहवा वि कुलगणे संघे । पंचिंदियववरमणं, काउं नित्थारणं कुज्जा ॥ १ ॥ एवं तु करितेणं, अब्भुच्छित्ती कया उ तित्थम्मि । जइ वि सरीरावाओ, तह वि य आराहओ सो उ ॥ २ ॥ " यस्तु समर्थोऽप्यागाढेऽपि प्रयोजने न प्रगल्भते स विराधकः । इहाभिषेक उपाध्यायः स येषु येष्वपराधेषु पाराञ्चिकमापद्यते तेषु बहुशः पाराञ्चिकापराधेषु सर्वेष्वपि शुद्धिनिमित्तमनवस्थाप्यः क्रियते । यथा भिक्षोरनवस्थाप्यपाराञ्चिकेऽपि प्राप्तस्य मूलमेव चरमं प्रायश्चित्तं भवति, एवमुपाध्यायस्याप्यनवस्थाप्यमेव चरमं, तथा अनवस्थाप्यापत्तिषु उपचारादनवस्थाप्याख्यप्रायश्चित्तापत्तिकारिणीष्वतिचारप्रतिसेवास्वनेकासु प्रसज्जन् प्रसक्तिं कुर्वाणोऽनवस्थाप्यः क्रियते ।

स चानवस्थाप्यः क्रियमाणः कस्मिन्क-
स्मिन्विषये क्रियते इत्याह—

कीरइ अणवट्ठप्पो, सो लिंगखित्तकालओ तवओ ।
लिंगेण दव्वभावो, भणिओ पव्वावणाऽणरिहो ॥

क्रियते तथाविधापराधकारित्वान्महाव्रतेषु लिङ्गे वा नाऽवस्थाप्य इत्यनवस्थाप्यः। स चतुर्धा–लिङ्गतः, क्षेत्रतः, कालतः, तपोविशेषतश्चेति। लिङ्गं द्विधा–द्रव्ये च भावे च। तत्र द्रव्यलिङ्गं रजोहरणादि, भावलिङ्गं महाव्रतादि। अत्र चतुर्भङ्गी–द्रव्यलिङ्गेन भावलिङ्गेन चानवस्थाप्य इत्येको भङ्गः। द्रव्यलिङ्गेनानवस्थाप्यो न भावलिङ्गेनेति द्वितीयः। भावलिङ्गेनानवस्थाप्यो न द्रव्यलिङ्गेनेति तृतीयः। उभाभ्यामप्यनवस्थाप्य इति चतुर्थः। इह द्रव्यलिङ्गेन भावलिङ्गेन चाऽनवस्थाप्यः प्रथमभङ्गस्थः प्रव्राजनाऽनर्हो भणितः ।

लिङ्गानवस्थाप्यादिचातुर्विध्यमेव वितन्वन्नाह–

अप्पडिविरतोसन्नो, न भावलिंगारिहोऽणवट्ठप्पो ।
जो जत्थ जेण दूसइ, पडिसिद्धो तत्थ सो खित्तो ॥

अप्रतिविरतः साधर्मिकान्यधार्मिकस्तैन्यात्प्रदुष्टचित्तत्वेनानिवृत्तः स्वपक्षपरपक्षप्रहरणोद्यतश्च निरपेक्षानुपशान्तवैरो यः स द्रव्यभावलिङ्गाभ्यामनवस्थाप्योऽनवस्थाप्यप्रथमभङ्गवर्ती क्रियते। हस्तातालदायी अर्थादानकरो वाऽवसन्नादिकश्च तत्तदायानिवृत्तो न भावलिङ्गार्हः। अयं भावः–स द्रव्यलिङ्गी भवति न भावलिङ्गमर्हति, भावलिङ्गमपेक्ष्यानवस्थाप्यतृतीयभङ्गवर्ती भवतीत्यर्थः। द्वितीयचतुर्थभङ्गौ पुनर्न सम्भवतः, क्षेत्रतोऽनवस्थाप्यो यो यत्र क्षेत्रे येन कर्मणा दुष्यते स तद्दोषकरणानिवृत्तोऽपि क्षेत्रे प्रतिषिद्धो महाव्रतेषु स्थापने निराकृतो यथार्थादानकारी तत्रैव क्षेत्रे न महाव्रतेषु स्थाप्यते, यतः पूर्वाभ्यासात् ते लोका निमित्तं पृच्छेयुः, स च तं निमित्तज्ञानजमृद्धिगौरवं सोढुमक्षमः कदाचित् कथयेत्, ततोऽन्यत्र नीत्वोपस्थाप्य उत्तमार्थप्रतिपन्नस्य पुनस्तत्रापि स्वस्थानेऽपि स्थितस्य महाव्रतारोपः कार्य एव। उक्तौ लिङ्गक्षेत्राऽनवस्थाप्यौ। जीत०।

जत्तियमित्तं कालं, तवसा उ जहन्नएण छम्मासा ।
संवच्छरमुक्कोसं, आसायइ जो जिणाईणं ॥ ८१ ॥

यो यावन्तं कालं दोषाद्नोपरमते तावन्तं कालमनवस्थाप्यः क्रियते। तपसा त्वनवस्थाप्यो द्विधा–आशातनाऽनवस्थाप्यः, प्रतिसेवनाऽनवस्थाप्यश्च। तत्र जिनादीनां तीर्थकरसङ्घश्रुताचार्यमहर्द्धिकगणधराणामाशातनां यः कुर्यात्। यथा–तीर्थकरैः भवोपायकुशलैरपि गृहवासत्यागादिकाऽतिकर्कशा देशना कृता; यदि च गृहवासो न श्रेयान् ततः किमिति स्वयं गृहवासे वसन्ति स्म, भोगांश्च भुक्तवन्त इत्येवं कृतोऽधिक्षेपः। सङ्घं च दृष्ट्वाऽवज्ञया वदेत्–हुं २ दृष्टा मयाऽरण्येऽपि सङ्घाः शृगालश्वानवृकखिक्खरकादीनामिति। श्रुतं चैवमधिक्षिपति यथा–"कायाववाय निच्चिय, पुणो वि निच्चिय पमायपया। मुक्खस्स देसणाए, जोइसजोणीहिं किं कज्जं॥१॥" आचार्यं च जात्यादिभिरधिक्षिपति। महर्द्धिकाश्च गणभृतो गौतमादयः, ये वा यस्मिन् युगे प्रधानभूताः, तान् ऋद्धिरसा गौरवप्रसक्ताः कथका इव लोकावर्जनार्थिता इत्यादिवाक्यैरधिक्षिपति। स आशातनाकारित्वादाशातनतपाऽनवस्थाप्यः। स जघन्येन षण्मासान् उत्कर्षतः संवत्सरं यावत् तपः कुर्वन् कर्तव्यः, तावता च तपसा क्षपिताऽऽशातनातनितकर्मत्वादूर्ध्वं महाव्रतेषु स्थाप्यते, प्रतिसेवनाऽनवस्थाप्यश्चोत्तरगाथायां वक्ष्यते।

सा चेयम्—

वासं बारसवासा, पडिसेवी कारणाउ सव्वो वि ।
थोवं थोवतरं वा, वहिज्ज मुञ्चिज्ज वा सव्वं ॥ ८२ ॥

प्रतिसेवी प्रतिसेवनाऽनवस्थाप्यः साधर्मिकान्यधार्मिकस्तैन्याद्यां हस्तातालादिभिश्च भवति, स च जघन्यतो वर्षम्, उत्कृष्टतो द्वादश वर्षाणि, तदनन्तरं व्रतेषु स्थाप्यते। स चानवस्थाप्यसंहननादिगुणयुक्त एव क्रियते, अन्यस्य तु मूलमेव दीयते।

अथ कीदृशगुणयुक्तस्यानवस्थाप्यं दीयत इत्याह—

"संहणणविरियआगम-सुत्तत्थविहीइ जो समग्गो य ।
तवसी निग्गहजुत्तो, पवयणसारे य गहियत्थो ॥ १ ॥
तिलतुसमत्तिभागमित्तं, वि जस्स असुभो न विज्जई भावो ।
निज्जूहणारिहो सो, सेसे निज्जूहणा नत्थि ॥ २ ॥
एयगुणसंपउत्तो, पावइ अणवट्ठमुत्तमगुणोहो ।
एयगुणविप्पहूणे, तारिसगम्मी भवे मूलं ॥ ३ ॥"

[ तवसी ] तपश्चरणवान् [ निग्गहजुत्तो ] जितेन्द्रियः [ निज्जूहणारिहो ] गच्छात् पृथक्करणार्हः अपवादतस्त्वनन्यसाध्यकुलगणसङ्घकार्यकारी, बहुजनसाध्यं च कार्यं शक्नुवन्नित्युच्यते, तस्माधकश्चायमित्यत कारणात्सर्वोऽपि द्विप्रकारोऽपि आशातनेनावस्थाप्यते। प्रतिसेवनाऽनवस्थाप्यश्च गुरुमुखात् सङ्घादेशात् स्तोकं स्तोकतरं वा, मासद्वयं मासिकमात्रं वा अनवस्थाप्यतपो वहेत्। सङ्घो वा सार्थोपप्रभाविकेनेत्रायमनवस्थाप्यशोध्यमतश्चारमलं क्षालयिष्यतीति सर्वं मुञ्चेत, अनवस्थाप्यतपो न कारयेदित्यर्थः। जीत०। बृ०।

यस्त्वनवस्थाप्यतपः प्रतिपद्यते तद्विधिमाह–

आसायणा जहन्नं, छम्मासुक्कोस बारस उ मासा ।
वासं बारसमासे, पडिसेवओ कारणे भणिओ ॥
इत्तिरियं निक्खेवं, काउं वन्न गणं गमित्ताणं ।
दव्वाइ सुहे वियडणे, निरुवसग्गट्ठ उवसग्गो ॥
अप्पच्छय निब्भयया, आणाभंगो य जंतणा सगणे ।
परगणे न होंति एए, आणा थिरया भयं चेव ॥

गाथाषट्कं यथा पाराञ्चिके व्याख्यातं तथैवात्र मन्तव्यम्, नवरं, [दव्वाइसुहे वियडण त्ति] द्रव्यक्षेत्रकालभावेषु शुभेषु प्रशस्तेषु; द्रव्यतो वटवृक्षादौ क्षीरवृक्षे, क्षेत्रत इक्षुक्षेत्रादौ, कालतः पूर्वाह्ने, भावतः प्रशस्तेषु चन्द्रताराबलेषु, गुरूणां विकटनामालोचनां ददाति। तत आचार्या भणन्ति–"एयस्स साहुस्स अणवट्ठप्पतवस्स निरुवसग्गनिमित्तं ठामि काउस्सग्गं ति। अन्नत्थूससिएणं" इत्यादि वोसिरामीति यावत्। ततश्चतुर्विंशतिस्तवमुच्चार्याचार्या भणन्ति–एष तपः प्रतिपद्यते, ततो न भवद्भिः सार्धमालापादिकं विधास्यति, स्वयमप्येतेन सार्धमालापादिकं परिहरध्वमिति। बृ० ४ उ०।

वंदइ न इ वंदिज्जइ, परिहारतवं सुदुच्चरं चरइ ।
संवासो से कप्पइ, नालवणाईणि सेसाणि ॥ ८३ ॥

अनवस्थाप्यतपश्चरणकरणकालं यावत् स्वगणं गीतार्थं भिक्षिप्याचार्य उपाध्यायो वा प्रशस्तेषु द्रव्यक्षेत्रकालभावेषु, तत्र द्रव्यतो वटादौ क्षीरवृक्षे, क्षेत्रतः इक्षुशालिक्षेत्रकुसुमितवनखण्डप्रदक्षिणावर्तजलपद्मसरश्चैत्यगृहादिषु, कालतः पूर्वाह्ने, भावतः प्रशस्तेषु चन्द्रताराबलेषु, संध्यागतादिनक्षत्रवर्जमालोचनां प्रयुङ्क्ते स्वातिचारं प्रकाशयति। आलोचनाऽनन्तरं जघन्येन मासमुत्कर्षतः षण्मासादिकमनवस्थाप्यतपःप्रपद्यमाने आलोचनादायकः कायोत्सर्गं करोति। "एयस्स आयरियस्स अणवट्ठप्पतवस्स निरुवसग्गनिमित्तं ठामि

काउस्सग्गं अन्नत्थ उस्ससिएणं, इत्यादि 'वोसिरामि' इति यावत् चतुर्विंशतिस्तवमनुचिन्त्य पारयित्वा चतुर्विंशतिस्तवमुच्चार्या-ऽऽचार्यो वक्ति-"एस तवं पडिवज्जइ, न किंचि आलवइ मा इ आलवह । अत्तट्ठचिंतगस्स उ, वाघाओ भे न कायव्वो ।" एष युष्मान्नालपिष्यति, युष्माभिरपि नालाप्यः, एष सूत्रार्थे शरीरवार्तां वा न प्रक्ष्यति, युष्माभिरपि न प्रष्टव्यः । खेलमल्लकमात्रादिकं वा नास्य ग्राह्यमर्पणीयं वा, उपकरणं परस्परं न प्रतिलेख्यं, भक्तपानं परस्परं न ग्राह्यम । सङ्घाटकोऽस्य न मेलनीयः । अनेन सहैकमण्डल्यां न भोक्तव्यम, किमप्यनेन सार्धं न कार्यं कार्यमिति । अधुना गाथाऽक्षरार्थः-प्रतिपन्नाऽनवस्थाप्यतपः शैक्षादीनपि वन्दते, न चासौ वन्द्यते । परिहारतपश्च पारिहारिकसाधूनां तपः ग्रीष्मे चतुर्थषष्ठाष्टमानि, शिशिरे षष्ठाष्टमदशमानि, वर्षास्वष्टमदशमद्वादशानि जघन्यमध्यमोत्कृष्टानि, पारणके च निर्लेपं, भक्तमित्येवं रूपं सुदुश्चरं चरति । संवासः सहवासो गच्छेनास्य एकक्षेत्र एकोपाश्रये एकस्मिन् पार्श्वे शेषसाधुपरिभोग्यप्रदेशे कल्पते, नालपनादीनि शेषाणि; इत्येष सङ्क्षेपतोऽनवस्थाप्यविधिः । उक्तमनवस्थाप्यार्हम । जीत० ।

एवंविधं तपः प्रतिपद्य यदसौ विदधाति तदुपदर्शयति—

सेहाई वंदंतो, पग्गहियमहातवो जिणो चेव ।
विहरइ बारसवासे, अणवट्ठप्पो गणे चेव ॥

शैक्षादीनपि वन्दमानो जिनकल्पिक इव प्रगृहीतमहातपाः पारणके निर्लेपं भक्तपानं गृहीतव्यमित्याद्यनेकाभिग्रहयुक्तं चतुर्थषष्ठादिकं विपुलं परिहारतपः कुर्वाणोऽसौ भावः । एवंविधोऽनवस्थाप्यो गण एव गच्छान्तरे एवोत्कर्षतो द्वादश वर्षाणि विहरति ।

इदमेव भावयति—

अणवट्ठं वहमाणो, वंदइ सो सेहमाइणो सव्वे ।
संवासो से कप्पइ, सेसा उ पया न कप्पंति ॥

परगणेऽनवस्थाप्यं वहमानः स उपाध्यायादिः शैक्षादीनपि सर्वान् साधून् वन्दते, तस्य च गच्छेन सार्धमेकत्रोपाश्रये एकस्मिन् पार्श्वे शेषसाधुजनापरिभोग्ये प्रदेशे संवासं कर्तुं कल्पते । शेषाणि तु पदानि न कल्पन्ते ।

कानि पुनस्तानीत्याह---

आलावणपडिपुच्छण-परियट्टणवंदणग मत्ते ।
पडिलेहणसंघाडग-भत्तदाणसंभुंजणा चेव ॥ १०३ ॥

आलापनं स साधुभिः सह न कारयते, सर्वेषामपि स करोति, तस्य पुनः साधवो न कुर्वन्ति, (मत्त त्ति) खेलमात्रादिप्रत्यर्पणं तस्य न क्रियते, सोऽपि तेषां न करोति । उपकरणं परस्परं न प्रत्युपेक्षन्ते, संघाटकेन परस्परं न भवन्ति । भक्तदानमन्योन्यं न कुर्वन्ति । एकत्र मण्डल्यां न संभुञ्जते । यच्चान्यत् किंचित्करणीयम, तत्तेन सार्धं न कुर्वन्ति । 'सघो न लभइ कज्ज' इत्यादिगाथाः पाराञ्चिकवद्द्रष्टव्याः । बृ० ४ उ० । ( अनवस्थाप्यस्य गृहिभूतस्यागृहिभूतस्य चोपस्थापना 'उवट्ठावणा' शब्दे द्वि० भा० ८९० पृष्ठे वक्ष्यते) तपोऽनवस्थाप्यश्च चतुर्दशपूर्वधरे श्रीभद्रबाहुस्वामिनि व्युच्छिन्नः । "अणवट्ठप्पो तवसा, तव पारंचिय दोवि वुच्छिन्ना । चउदसपुव्वधरम्मि, धरंति सेसाउ जा तित्थं" ॥ १ ॥ जीत० ।

**अणवट्ठप्पया**-अनवस्थाप्यता-स्त्री० । येन पुनः प्रतिसेवितेन उत्थापनाया अप्ययोग्यः सन् कञ्चित्कालं न व्रतेषु स्थाप्यते तदनवस्थाप्यताऽर्हत्वादनवस्थाप्यता प्रायश्चित्तम । यद्वा-यथोक्तं तपो यावन्न कृतं तावन्न व्रतेषु लिङ्गे वाऽवस्थाप्यत इत्यनवस्थाप्यस्तस्य भावोऽनवस्थाप्यता । नवमप्रायश्चित्ते, प्रव० ९८ द्वा० । आव० । पंचा० ।

**अणवट्ठप्पारिह**-अनवस्थाप्यार्ह-न० । नवमप्रायश्चित्ते, स्था० । यस्मिन्नासेविते कञ्चन कालं व्रतेष्वनवस्थाप्य कृत्वा पश्चाच्चीर्णतपास्तद्दोषोपरतो व्रतेषु स्थाप्यते तदनवस्थाप्यार्हम । स्था० १० ठा० ।

**अणवट्ठप्पावत्ति**-अनवस्थाप्यापत्ति-स्त्री० । ( उपचारात् ) अनवस्थाप्याख्यप्रायश्चित्तापत्तिकारिणीषु प्रतिसेवासु, जीत० ।

**अणवट्ठाण**-अनवस्थान-न० । न० त० । सामायिककालावधेरपूरणे यथा कथञ्चिद्वाऽनादृतस्य करणे, एष सामायिकस्य पञ्चमोऽतिचारः । उपा० १ अ० । धर्म० ।

**अणवट्ठिय**-अनवस्थित-त्रि० । अनियतप्रमाणे, "अणवट्ठियाण तत्थ खलु गाईया पमत्ता" चं० प्र० ८ पाहु० । अस्थिरे कल्पानुयोगाश्रवणानर्हभेदे, बृ० ।

तत्रानवस्थितं तावदाह-

दुविहो लिंगविहारो, एक्केक्को चेव होइ दुविहो उ ।
चउरो य अणुग्घाया, तत्थ वि आणाइणो दोसा ॥

अनवस्थितो द्विविधः । तद्यथा-लिङ्गानवस्थितो विहारानवस्थितश्च । एकैकः पुनरपि द्विविधो भवति । तदुभयमपि द्वैविध्यमनन्तरगाथायां वक्ष्यते । चत्वारश्च मासा अनुद्घाता गुरवः, उपलक्षणत्वाल्लघुमासादिकं वा अत्र यत् प्रायश्चित्तं भवति, तत्तु यथास्थानमेव भावयिष्यते । तत्राऽपि लिङ्गानवस्थितविहारानवस्थितयोरप्याज्ञादयो दोषा द्रष्टव्याः ।

अथैनामेव गाथां व्याख्यानयति-

गिहिलिंग अन्नलिंगे, जो उ करेइ स लिंगओ दुविहो ।
चरणे गणे अ अथिरो, विहार अणवट्ठिओ एसो ॥

गृहिलिङ्गं गृहस्थानां वेषम, अन्यलिङ्गमतीर्थिकानां नेपथ्यम । यः साधुः, तुशब्दो विशेषणे । किं विशिनष्टि? दर्पेण यो लिङ्गद्वयं करोति, स एष लिङ्गतो द्विविधोऽनवस्थितः । अस्य च द्विविधस्यापि मूलं यथा चोलपट्टकं बध्नतः एकत उभयतो वा स्कन्धोपरि कल्पाञ्चलानामारोपणरूपं गरुडपाक्षिकं प्रावृण्वत उत्तरासङ्गरूपमर्द्धांसस्यासं कुर्वतः प्रत्येकं चत्वारो गुरवो मासाः, द्वावपि बाहू छादयित्वा संयती प्रावरणमावृत्वानस्य चत्वारो लघवः, कल्पेन शिरःस्थगनरूपां शीर्षद्वारिकां कुर्वतो मासलघु, चतुष्कलं मुत्कलं वा कल्पं स्कन्धोपरि कृत्वा गोपुच्छवदधोलम्बमानं कुर्वतो मासलघु । एतेऽपि लिङ्गाऽनवस्थितेऽन्तर्भवन्ति । तथा चरणे चारित्रे अस्थिरो यः पुनः पुनश्चारित्रात्प्रतिपतति, तस्य यदि सूत्रं ददाति तदा चतुर्लघु, अर्थं ददाति तदा चतुर्गुरु, गणे गच्छे अस्थिरः पुनर्गणात्क्रमणं सङ्क्रामति । एष द्विविधोऽपि विहारानवस्थितः । एतद्विपरीतस्य स्वलिङ्गावस्थितस्य संविग्नविहारावस्थितस्य च दातव्यं यदि न ददाति, तदा तथैव सूत्रे चतुर्लघु, अर्थे चतुर्गुरु । गतमनवस्थितद्वारम । बृ० १ उ० । स्था० । ( आचेलक्यादयः षडनवस्थितकल्पाः 'कप्प' शब्दे तृ० भा० २२६ पृष्ठे वक्ष्यन्ते ) "अणवट्ठियस्स करणया " अनवस्थितस्याल्पकालीनस्यानियतस्य सामायिकस्य करणमनवस्थितकरणमल्पकालकरणान-

